सम्पुटिः-०१ सञ्चिका-१०

सप्तगिरि अनुबन्धम्



तिरुमलतिरुपतिदेवस्थानानि

# बालसप्तगिरिः

## डिसेम्बर् -२०२०

## विषयसूचिका



**मुखचित्रम्** – श्रीगोदादेवी

**अन्तिमरक्षापुटः** – भक्त हनुमान्

# हनुमद्वाक्कौशलम्

- डा हरि किशोर गौड्

**तानृष्यमूकस्य समीपचारी चरन्ददर्शाद्भुत दर्शनीयौ**
**शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव चिचेष्ट किञ्चित्।।**

इति महर्षिः वाल्मीकिः रामलक्ष्मणयोः दर्शनानन्तरं सुग्रीवस्य मनः स्थितिं निरूपितवान्। ततः श्रीमद्रामायणे हनुमत्प्रवेशः। तत्पूर्वं हनुमान् न दृश्यते। किष्किन्धाकाण्डे द्वितीयसर्गे कविना तत्प्रवेशः प्रदर्शितः। अभयप्रदातृरुपेणास्य प्रवेशः प्रदर्शितः। तदित्थम् -

**ततस्तं भयसंत्रस्तं वालिकिल्बिपशङ्कितम्।**
**उवाच हनुमान् वाक्यं सुग्रीवं वाक्यकोविदः।।**
**संभ्रमस्त्यज्यतामेष सर्वैर्वालिकृते महान्।**
**मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः।**
**अहो शाखामृगत्वं ते व्यक्तमेव प्लवंगम।**
**लघुचित्ततयाऽऽत्मानं न स्थापयसि यो मतौ।।**
**बुध्दिविज्ञानसंपन्न इङ्गितैः सर्वमाचर।**
**न ह्यबुध्दिं मनो राजा सर्वभूतानि शास्ति हि।।**

(किष्किन्धा - २ - १३,१४, १७, १८)



अभयमुक्त्वा सुग्रीवाय बुध्दिविज्ञानस्यावश्यकतामुपदिष्टवान्। ततस्तन्निदेशात् भिक्षुरुपेण रामलक्ष्मणावभिगम्य -

**ततश्च हनुमान्वाचा श्लक्ष्णया सुमनोज्ञया।**
**विनीतवदुपागम्य राघवौ प्रणिपत्य च।।**
**(किष्किन्धा - ३ -३)**
**आबभाषे च तौ वीरौ यथावत्प्रशशंस च।।**

आदिकविः वाल्मीकिमहर्षिः हनूमन्तं 'वाक्यकोविदः' इति आरम्भे एव प्रदर्शितवान्। पुनरत्र रामसान्निध्ये 'वाचा श्लक्ष्ण सुमनोज्ञया हनुमान' इति वदति। हनुमत्पात्रे वाग्मिनां वरं कविः प्रदर्शयितुमुत्सहतेति विशदम्। तद्रामवाक्यादवगमयितुमीष्टे। यथा

**सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः।**
**तमेव काङ्क्षमाणस्य ममान्तिकमिहागतः।।**
**(किष्किन्धा -३ - २७-३०)**
**तमभ्यभाष सौमित्रे सुग्रीवसचिवं कपिम्।**
**वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिंदमरिंदम।।**
**नानृग्वेदविनीतस्य वा यजुर्वेदधारिणः।**
**ना सामवेदविदुषः शक्यमेवं प्रभाषितुम्।।**
**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् बहुव्याहरतानेन न किञ्चिदपशब्दितम्।।**



इत्येवं रामः अपशब्दरहितं हनुमद्भाषणं प्रशशंस। तत्र कारणं किम्? स्वयं रामेण कथितः तस्याध्ययनविशेषः। अतः ''स्वाध्याऽयोध्येतव्यः, स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् इत्यादि वेद वाक्यानामुपवृंहणात्मकमिदं हनुमद्वृत्तमिति शम्।

द्वादश सूरयः

# श्रीमधुरकवि आळ्वार्

- के. कल्याणी

सामान्यतः लोके मानवानां अनेकानेक बुन्धु सम्बन्धाः विद्यन्ते। तत्रऽपि रक्त सम्बन्धं व्यापर सम्बन्धं व्यापारसम्बन्धं भार्यभर्तृसंम्बन्धं, भक्ताः भगवन्तस्य सम्बन्ध, गुरुशक्त सम्बन्ध - इत्यादीनिं।

अत्र एका कभा प्रस्तयते - एकं बृहत वटवृक्षं अस्ति। तत् छायां एका शिला फलकं अस्ति। तत्र कितिपय मुनिशिष्याः जिज्ञाशया, आशक्तेन एकं आध्यात्मिक संशयं (सन्देहं) प्रति दक्षिणामुर्ति गुरुं प्रति प्रतीक्षयत् आस्ते। तदा गुरुः मौनव्रतं आचरति। तदा गुरुसंदर्शनेनेव, तेषां तेजो प्रभावेन शिष्याना सन्देह निवृत्तिः जातः। इति प्रसिद्धा कभा स्तूयते। एतत् पौरानिकवृत्तान्ते श्रीवैष्णवेः आल्वार् तिरुरन्नगर्यं ' - तिन्तिणिवृक्ष मध्ये स्थितं एकं बिल्वे (मध्ये नम्मऽवार् वयसा कनिष्टः



परंतु मधुरकविः अल्वार् आध्यत्मिक सेन्देहाः निवृतिः करोति। स एव नम्मल्वार् आचार्यः वृणेतेऽभवत्। सर्वं गुरुरेव मधुरकवि कृते सर्वं आचार्येएव। अयं मधुरकविः आचार्य निष्टस्य उदाहरण प्रायः (तयोः मध्ये) गुरर्तशिष्यायोः मध्ये कुलान्तरभेदं अपि नास्ति। अयं मधुरकविः नम्माल्वरा कृते देवालयं अपि निर्मित एतत् चरितं विन्त चरितं इति स्तूयते। आल्वार् तिरुनगरि समीपे ‘‘तिरुकोल्लर’’ मध्ये एका नारायण दीक्षितस्य कुमारः कुमुदः नामा। अयं मृदु मधुर कवित्वं भषणेन अयं ‘‘मधुरकविः’’ इति प्रसिद्धं नाम सेजातं। तस्य प्रथमगुरुः पितुः एव। पितृ सकाशे। एक सकल सर्वशास्त्रिणि अधीतवान् परंतु सामन्य जीवनैगमनं

न इच्छन् तीर्थयात्रां प्रति अगच्छत्। उत्तर भारत देशे सर्वाणि पुण्यक्षेत्रान् दर्शयन् अयोध्यायां कतिपय दिनानि निवासं अकरोत्।

एकस्मिन् दिने रात्रौ अयं मधुरकविः दक्षिणदिग्भागे स्थितं एकं दिव्य तोजोकान्ति पुञ्जं अदर्शयत्। एतत् अग्निज्वलनं इति अमन्यत। परंतु प्रातः दृष्टा चेत् तत्र किमपि चिह्नानि नास्ति। अन्यस्मिन् दिने रात्रौ अयं मधुरकविः पुनः दिव्यतेजस्वीं दृष्टवान्। अन्येषानं नैव दर्शनं। परंतु अयं कविः एतत्व दिव्यतेजं प्रति अन्वषेनं कर्तुं गतवान् कतिपयदिनाः गताः, एकस्मिन् दिने तत् दिव्यतेजं दृष्टि दृष्ट्वा अन्ये ''आदिनाथस्वामिन् सेवयित्वा, पुनः आगमनः समये तत्र तिन्त्रिणिवृक्षस्य बिल्वे मध्ये एका दिव्यतेजो आकारं दृष्टवान्। परंतु अयं महात्मा समाधानं अपि न दत्तवान्।

एकस्मिन् दिने बृहत् पाषाण खण्डं अत्यधिकं शब्दं कुर्वन् तस्मिन् समये ध्यान भग्नं संजातं नम्मल्वार कृते। नेत्रे निमील्म एकं वारं मधुरकविं दृष्टवान्। तदा बिल्व मध्ये स्थितं महात्मा भाषणं अपि न अथाति इति अध्यात्मिक प्रश्नानि पृच्छति।

एकस्मिन् दिने एकं बृद्ध पाषाण खण्डं अत्यधिकं शब्दं कुर्वन्, तस्मिन् समये ध्यान भग्नं संजातं नम्मवार् कृते। नेत्रे निमील्य एकं वारं मधुरकविं दृष्टवान्। तदा बिल्व मध्ये स्थितं महात्मा भाषणं अपि न अथाति इति अध्यत्मिक प्रश्नानि पृच्छति।

तदा नम्मल्वार् संतृप्तिं समाधानं उक्तं तदा तयोः पादयोः मध्ये दण्डप्रणामं कृत्वा ''दासोऽहं इति उक्तवान्। तदा नम्माल्वार् अयं शिष्यत्वेन स्वीकृतः। प्रसिद्धोऽयं नम्माल्वार् चरितं देशं देशं प्रति प्रचारं कृत्वा अनेक पाशुरान् रचितवान्।

सर्वे गुरुः इति भावयन् गुरुः एव श्रीहरिः इति, स एव ज्ञानोपदोश कर्तुः इति श्रीमहाविष्णुः आयर्य रुपेण समस्य जीवनोद्धरपं कृतं इति भवयन् स्थितः। अयं एव मधुरकवि जीवन साराशं महत्।

# श्रीमध्वाचार्यः

- विद्वान् वि.प्रदीप् कुमारः

द्वैतमतस्थापकाचार्याः श्रीमदानन्दतीर्थमुनिवर्या रजतपीठपुरसमीपस्थ पाजकक्षेत्रे वेदवतीनारायणभट्ट(मध्यगेहभट्ट) दम्पत्योः सुपुत्रत्वेन त्रयोदशशतके अजायत। ते वायुदेवस्य तृतीयावतारत्वेन साम्प्रदायिकैः अभिज्ञायन्ते। बाल्ये एव ते प्रतिभादिसद्गुणसम्पन्ना आसन्निति श्रूयते। श्रीअच्युतप्रेक्षगुरुणा ते सन्यासाश्रमस्वीकरणानन्तरं कर्णाटकराज्ये दक्षिणकन्नडमण्डले उडुपि इति प्रसिद्धान् रजतपीठपुरात् दक्षिणदिशि बेळ्ळे इति ग्रामे बृहद्भिः पाषाणैः आवृते अत एव पाजक इति प्रसिद्धे प्रकृतिरम्ये ग्रामे नडिल्लाय नारायण-वेदवती(प्रायशः) दम्पत्योः एकैकपुत्रत्वेन श्रीमदाचार्याः अवतेरुः। तदा कलियुगारम्भात् ४३३८ संवत्सराः अतीताः ३९ तमः विलम्बिसंवत्सरः प्रवर्तमानः आसीत् । (क्रि.श.१२३८) आश्वयुजशुक्लदशम्याः मध्याह्ने सज्जास्य स्वपुत्रस्य नारायणभट्ट वासुदेव इति नामसंस्कारं चकार। बाल्ये एव प्रतिभावान् आसीदयम्। अपि च वैराग्यादिभिः अध्यात्मायोग्यगुणैः युक्तश्च आसीत्। एतादृश गुणयुक्ताय ब्रह्मचारिणे सौम्यसंवत्सरे शुभदिने रजतपीठपुरे तदानीं अच्युतप्रज्ञ (अच्युतप्रेक्ष) इति प्रसिध्देन यतिना सन्न्यासाश्रमो दत्तः। सन्न्यासिनेऽस्मै पूर्णप्रज्ञ इति नाम कृतम्।



बाल्ये एव ते (एकादशे वयसि) वासुदेवपण्डितनामकं महान्तं वादार्थम् रजतपीठपुरम् आगतं वादे पराजित्य गुर्वच्युतप्रज्ञैः आनन्दतीर्थ इति नाम प्राप्तवन्तः। पुनस्ते बौध्दविद्वांसं वादिसिंहेन सहागतं

बुद्धिसागरनामानं वादे निरुत्तरं कृत्वा स्वगुर्वादीन् सर्वान् समतोषयत् आनन्दतीर्थनामापि अन्वर्थकमभवत्। एवं च वासुदेवः पूर्णप्रज्ञोऽभवत्, पूर्णप्रज्ञस्तु आनन्दतीर्थोऽभवत्। आनन्दतीर्थो मध्वोऽभवत्। स च पूर्णप्रज्ञः दशप्रमतिः इत्यपि प्रसिद्धः। दश, शत, सहस्रादयः शब्दा पूर्णत्वद्योतका इति प्रमाणसत्वात्।

तत आचार्यवर्याः दक्षिणभारतयात्रां कृतवन्तः। तदा अनन्तशयन, कन्याकुमारी, श्रीरङ्गं प्रभृतीनि पुण्यक्षेत्राणि सन्दर्शितवन्तः तत्त्वावादप्रचारमपि कृतवन्तः। ततो निर्गत्य पुनरुडुपिपत्तनमागत्य गीताभाष्यं रचितवन्तः। पुनः तत्त्वप्रचारादिकं कर्तुं उत्तरभारतयात्रां कृतवन्तस्ते गीताभाष्यं वेदव्यासाय समर्पयितुं व्यासबदरीम् गत्वा ततो निवृत्य ब्रह्मसूत्रभाष्यं रचितवन्तः। ग्रन्थलेखनं सत्यतीर्थादिभिः स्वशिष्यैरेव कारितं च। आचार्यवर्याणां तत्त्ववादप्रचारेण बहवो तच्छिष्यत्वम् अंगीकृत्य सर्वत्र (बहुत्र) तत्त्ववादप्रचारं कृतवन्तः। दिग्विजयानन्तरं बहुभिः शिष्यसमूहैः आगतान् आचार्यवर्यान्। दृष्ट्वा अच्युतप्रज्ञाः स्वानन्दयुक्ता अभवन्। अपि च तत्त्ववादे पूर्णश्रद्धां दत्तवन्तश्चासन्। ततश्च किञ्चित्कालपर्यन्तं रजतपीठपुरे एव सन्तस्ते दशोपनिषदां भाष्यरचनां कृतवन्तः: ३७ सर्वमूलग्रन्थान् ते रचयामासुः। अस्मिन्नेव काले ते पश्चिमसमुद्रे लब्धश्रीकृष्णप्रतिमां उडुपिपुरे प्रतिष्ठाप्य अष्टमठान् स्थापयित्वा अष्टशिष्यान् पर्यायक्रमेण तदर्चनार्थं स्वमतप्रचारप्रसारार्थं च नियम्य द्वितीयवारं बदरीयात्रां चक्रुः। बदरीयात्रातः निर्गमनवेलायां गोदावरीतीरस्य एकस्मिन् तीर्थक्षेत्रे वर्तमानवेलायां प्रकाण्डपण्डितः शोभनभट्टनामैकः आचार्यप्रभावेन तच्छिष्यवृत्तिं स्वीकृत्य पद्मनाभतीर्थाः इति नाम्ना नैकेषां माध्वतत्त्वप्रसारकेन्द्राणां परम्पराकारणमभवत् मध्वमतप्रसारे अतिप्रमुखपात्रं निरवहच्च। स्वजीवितोद्देशे परिसमाप्ते सति स्वशिष्यान् स्वकार्ये नियोजयित्वा पुनः व्यासबदरीं निर्गतवन्तः।

तदा पिङ्गलसंवत्सरस्य माघशुद्धनवमी आसीत्। इयमेव मध्वनवमीति इदानीमपि आचर्यते।

ब्रह्मान्ता गुरवः साक्षात् इष्टं दैवं श्रियः पतिः।
आचार्याः श्रीमदाचार्याः सन्तु मे जन्मजन्मनि॥

चित्रकथा

# प्रह्लादकथा

तेलुगु मूलम् - दीपश्री , संस्कृतानुवादः- सुजाता मुनुकुट्ल
चित्रम्- के. तुलसीप्रसादः



प्रह्लादः दैत्यवंशे जन्म प्राप्तवति सति दैविकगुणैः विष्णुभक्त्या उन्नतो भूत्वा वर्धितः। पिता हिरण्यकशिपुः विष्णुद्वेषी। स्वसहोदरं हतवान् इति विष्णोः उपरि प्रतीकाराय ब्रह्माणम् उद्दिश्य तपः कृत्वा वरं प्राप्तुम् अरण्यमगच्छत्।तदा सः हिरण्यकशिपुः तस्मिन्नेव अरण्ये मृतवानिति श्रुत्वा तस्य वंशं नाशयितुं तस्य पत्नीं गर्भिणीं लीलावतीम् अपहृत्य गच्छतः इन्द्रात् नारदः उपायेन रक्षित्वा तस्य आश्रमं प्रति नीतवान्। इन्द्र! तव विपत्तिः अवश्यं भवति। लीलावतीं तत्यज। हिरण्यकशिपुः जीवितः एव।








आश्रमवातावरणप्रभावेण नारदोक्त विष्णुकथाविशेषान् श्रृण्वन् प्रह्लादः गर्भगतः एव अपार विष्णुभक्तियुक्तः अभवत्। ब्रह्मणा वरं प्राप्य हिरण्यकशिपुः पुत्रोत्साहेन लीलावतीं नयन् नारदाय कृतज्ञतां निवेदितवान्।

प्रह्लादस्य पञ्चमे वर्षे एव सर्वाः विद्याः बोधयित्वा गुरु चण्डामार्कौ प्रह्लादं हिरण्यकशिपोः समीपं आनीतवन्तौ। गर्भस्थित्याम् एव सर्वविद्यायाः सारं गृहीतस्य प्रह्लादस्य विद्याः सर्वाः अपि सूर्यस्य पुरतः दीपकान्तिवत् अभवन्। पुत्रस्य विद्याः परीक्ष्य हिरण्यकशिपुः प्रह्लादस्य हरिभक्तिं दृष्ट्वा न सहते स्म।




हिरण्यकशिपोः सूचनानुसारं चण्डामार्कौ प्रह्लादे विद्यमानं हरिभक्तिं दूरीकर्तुं अनेकाः प्रयत्नाः कृत्वा विफलौ अभवताम्। एतेन हिरण्यकशिपोः द्वेषः अधिको जातः।

प्रभोः आज्ञानुसारेण दण्डनायकः अन्नपानेभ्यः दूरीकृत्य अन्धकारकारागारे प्रह्लादस्य बन्धनं कृतवान्।

प्रह्लादः भीतिम्। अप्राप्य बुभुक्षापिपासातीतः हरिनामस्मरणेन कालं यापितवान्।


आहारपानीयान् त्यक्त्वा पुत्रचिन्तया दुःखमनुभवन्तीं मातरं दृष्ट्वा भक्तवत्सलः हरिः मातुः समीपं पुत्ररूपेण प्रह्लादस्य समीपं मातृरूपेण गत्वा तयोः आराहपानीयान् दत्वा चिन्तां दूरीकृतवान्।
हरिभक्तिम् अत्यजमानस्य प्रह्लादस्य दण्डनानि कठिनतरं कृतवान् हिरण्यकशिपुः। आयुधैः कृतं दण्डनं विफलं जातम् इति हेतोः गजपादैः मर्दनं कारितवान्। सोऽपि प्रयत्नः प्रह्लादस्य भक्तेः दासोऽहमभवत्।
मातः! प्रथमं भवती आहारं स्वीकरोतु।
ओं नमो नारायण!
ओं नमो नारायण!
शेषशयन नारायण!
शिखराग्रात् यदा प्रणुदत् तदा लक्ष्मीवल्लभः रक्षितवान्।
ओ नमो नारायण!
बन्धनं कृत्वा यदा सागरमध्ये स्थापितवन्तः तदा सागरकन्याः रक्षित्वा तीरं प्रापितवत्यः।
विषसर्पैः यदा दंशयति तदा ते सर्पाः अपि पुष्पमालाः अभवन्।
अग्नौ यदा स्थापितवन्तः तदा सः अग्निरपि तं न स्पृष्टवान्।
(भटानां एतानि सर्वाण्यपि वचनानि असत्यमिति मत्वा) अथवा एतत् सर्वं सत्यं वा इति आश्चर्यचकितः हिरण्यकशिपुः विषमानीय स्वहस्ताभ्यां प्रह्लादाय दत्वा अपाययत्। किन्तु प्रह्लादः पुनः यथास्थितिं प्राप्य हरिं कीर्तितवान्

तदा हिरण्यकशिपुः अहम् अधुनैव मम वरप्रसादरूपया गदया त्वां मारयामि इत्युक्तवान्। तदा प्रह्लादः जननमरणानि अस्माकं हस्ते न सन्ति। हरिः मां रक्षति इत्युक्तवान्। कः एष हरिः? कुत्र अस्ति? इति पृष्टवान् हिरण्यकशिपुः।

तदा प्रह्लादः अत्रास्ति तत्र नास्ति इति संशयः मास्तु हरिः सर्वान्तर्यामी इति प्रत्युत्तरं दत्तवान्।






उत्पाटितस्तम्भात् प्रकाशमानतेजसा प्रलयभीकररूपेण अवतरितवान् नृसिंहस्वामी। हिरण्यकशिपोः उदरं नखैः भित्वा तं मारयित्वा प्रह्लादं रक्षितवान्। विश्वासपूर्णान् जनान् सर्वदा रक्षामि इति अभयमदात्। प्रहलादस्योपरि पुष्पवृष्टिः अपतत्।

आगामि सञ्चिकायां
श्रीवेङ्कटेश्वरस्य अन्यदिव्यलीलाविलासं दृष्ट्वा... तराम...

स्वस्ति।

# जन्मस्य स्र्थाकता आवश्यं

- एम्. नागराजन्



समान्यतः लेको मानवाः जीवन समये एव, परं मरणानन्तरं अपि समाज सेवा करोति यदा वृक्षाः जीवन्तोऽपि यायां फलानि च ददाति। शुष्के चेत् पचन कार्ये उपयोगंकरोति।

अन्ये केचन याव जीव पर्यन्तं इतरेषां सदापीडनं कुर्वन्ति। तेषां त्यक्तव्यं। अन्ये केचन मानवाः तेन साकं सुखाशन्त्यि जीवनं कुर्वन्ति। सुखशन्त्यै तपनः करोति। परं तु यावन्ते जीवन्ति तावत् काल पर्यन्तं समाजस्य सेवा करणीयं

इति मनसि चिन्तयति। तदर्थं अयं मनुष्याः जीवन् 'वृक्ष' इव आदर्श रुपेण वर्तितव्यं। किमर्थं इति चेत् वृक्षाः यावत् पर्यन्तं जीवन्ति तावत् पर्यन्तं छायां, फलानिप दर्दाति। शुष्के अपि (मृतेऽपि) तेषां वृक्ष शखाः पचनार्थे उपयोगं कुर्वन्ति।

अन्यं उद्दिश्य एका पृच्छति - गृहे सः अस्तिवा? इति पृच्छन् गृह पार्श्वे स्थितानि सर्वेऽनि कतिपय मनावाः प्रति अपृच्छत्। तदा केचन सः बहिः गतः इति, अन्ये नास्ति इहलोके इति समाधानं उक्तवन्तः सःगृहेनास्ति इति मन्यते। सः नास्ति इति ज्ञायते समाजस्य। परं सः कथं अस्ति।

समान्यतः वृक्षाः आदर्शरुपेन भवतेऽपि तत् वृक्षाः विचक्षण ज्ञान रहित्येन यथोच्छं छोदनं करोति। अन्ये केचन द्वीवर्गे एकः नकिमपि कुर्वन् तेषां सम्बधि वृक्षानां छेदयन्ति। मानवानां कक्षा एवं विधा। परं तु शिक्षा वृक्षाणां। अद्ये एतत् अन्यायं खलु।

लोके कतिपय दिवानि यावत् सुखजीवनगमने श्रमजीवन मध्ये श्रम अपनेदनार्थं अयं वृक्षा छत्र इव स्थित्वा, आदर्शरुपेण स्वीकृत्वा जनाः जीवनं कर्तव्यं अभ्यासः कार्मः।



# विशिष्ट बालः

नाम - कलगा अच्युत शर्मा

जन्मतिथिः - २७-०९-२०१५

मातुः नाम - श्रीमति शैलज

पितुः नाम - श्री के.यन्.वि.कामेश्वरराव्

पठिता कक्षा - यु.के.जि.

अभिनिवेशं - स्तेत्र पठनं।

यदा कुसमं परिमलं व्यकीर्यते तद्वत अयं चिरंजीवि कलगा अच्युतशर्मा एकार्ध संवत्सरक्यसे एव ऐन्दव (हिन्दू) देवताः स्तेत्राणां मध्ये विशेष अभिरुचिः जिज्ञासा च आसीत्। स्वयमेव आन्ध्र भाषायां पठनं, लेखनं, सम्यक् अधीतवान्। १.विष्णु सहस्रनामास्तोत्रं २. ललितासहस्रनामस्तोत्रं ३. शिवभुजस्तेत्रं, ४. रामायण श्लोकाः५. शिवापराधक्षमर्पणस्तोत्रं ६. भगवद्गीता संपूर्ण अध्यानि सम्यक् अधीतवान्। परं तु एते सर्वे स्तोत्र पठनानि यूट्युप् चानल्, मध्ये अपि निक्षित्पं भवति।

प्राप्त विजयाः

१. बाल्ये एव सर्वाणि स्तोत्राणि सम्यक् अधीत्वा, पुनश्चारणे अयं बालः ''इण्डिया बुक् आफ् रिकार्ड्'' मध्ये स्थानं संपादितवान्।

२. बालये एव भगवद्गीते समस्त अध्यायानि पठनं, लेखने च ''इण्डिया बुक् आफ् रिकार्ड् मध्ये स्थानं अपि संपादितवान्।

# रसप्रश्नाः

- का.इ.वरददेशिक

१. गोदादेव्याः पितुः नाम किम् ?

अ. पेरियाल्वार्
आ. नम्माल्वार्
इ. तिरुमङ्गै आल्वार्
ई. रामानुजः

२. अस्मिन् नक्षत्रे गोदादेव्याः जननम् अभूत्?

अ. मघा नक्षत्रे
आ.उत्तरफल्गुणी नक्षत्रे
इ. पूर्वफल्गुणी नक्षत्रे
ई. पूषा नक्षत्रे

३. गोदादेव्या अपरं नाम किम्?

अ. आण्डाल्
आ. मीरा
इ. कलियन्
ई. लक्ष्मी

४. कस्मिन् वृक्षस्य अधः गोदादेवी दृष्टा प्रप्रथमं पित्रा ?

अ. तुलसी
आ. आम्रम्
इ. कदलीवृक्षम्
ई. वटवृक्षम्

५. तिरुप्पावैप्रबन्धं विहाय अन्यः कः प्रबन्धः अनया रचितो वर्तते?

अ. तिरुमालै
आ. तिरुमोलि
इ. तिरुवाय्मोलि
ई. नाच्चियार् तिरुमोलि

६. कस्मिन् दिव्यक्षेत्रे तस्याः जननमभूत्?

अ. श्रीविल्लिपुत्तूर
आ. श्रीरङ्गम्
इ. काञ्चीपुरम्
ई. मधुरा

७. तिरुप्पावैप्रबन्धे कति पाशुराणि सन्ति?

अ.५६
आ.३०
इ. २४
ई. ४३

उत्तराणि: १.अ २.इ ३.अ ४.अ ५.ई ६.अ ७.आ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।

